शनैश्चरस्तवराजः
श्री गणेशाय नमः ॥

नारद उवाच ॥

ध्यात्वा गणपतिं राजा धर्मराजो युधिष्ठिरः ।
धीरः शनैश्चरस्येमं चकार स्तवमुत्तमम् ॥ १॥

शिरो मे भास्करिः पातु भालं छायासुतोऽवतु ।
कोटराक्षो दृशौ पातु शिखिकण्ठनिभः श्रुती ॥ २॥

घ्राणं मे भीषणः पातु मुखं बलिमुखोऽवतु ।
स्कन्धौ संवर्तकः पातु भुजौ मे भयदोऽवतु ॥ ३॥

सौरिर्मे हृदयं पातु नाभिं शनैश्चरोऽवतु ।
ग्रहराजः कटिं पातु सर्वतो रविनन्दनः ॥ ४॥

पादौ मन्दगतिः पातु कृष्णः पात्वखिलं वपुः ।
रक्षामेतां पठेन्नित्यं सौरेर्नामबलैर्युताम् ॥ ५॥

सुखी पुत्री चिरायुश्च स भवेन्नात्र संशयः ।
सौरिः शनैश्चरः कृष्णो नीलोत्पलनिभः शनिः ॥ ६॥

शुष्कोदरो विशालाक्षो दुर्निरीक्ष्यो विभीषणः ।
शिखिकण्ठनिभो नीलश्छायाहृदयनन्दनः ॥ ७॥

कालदृष्टिः कोटराक्षः स्थूलरोमावलीमुखः ।
दीर्घो निर्मांसगात्रस्तु शुष्को घोरो भयानकः ॥ ८॥

नीलांशुः क्रोधनो रौद्रो दीर्घश्मश्रुर्जटाधरः ।
मन्दो मन्दगतिः खंजो तृप्तः संवर्तको यमः ॥ ९॥orअतृप्तः
ग्रहराजः कराली च सूर्यपुत्रो रविः शशी ।
कुजो बुधो गुरुः काव्यो भानुजः सिंहिकासुतः ॥ १०॥

केतुर्देवपतिर्बाहुः कृतान्तो नैरृतस्तथा ।
शशी मरुत्कुबेरश्च ईशानः सुर आत्मभूः ॥ ११॥

विष्णुर्हरो गणपतिः कुमारः काम ईश्वरः ।

कर्ता हर्ता पालयिता राज्यभुग् राज्यदायकः ॥ १२॥orराज्येशो
छायासुतः श्यामलाङ्गो धनहर्ता धनप्रदः ।
क्रूरकर्मविधाता च सर्वकर्मावरोधकः ॥ १३॥

तुष्टो रुष्टः कामरूपः कामदो रविनन्दनः ।
ग्रहपीडाहरः शान्तो नक्षत्रेशो ग्रहेश्वरः ॥ १४॥

स्थिरासनः स्थिरगतिर्महाकायो महाबलः ।
महाप्रभो महाकालः कालात्मा कालकालकः ॥ १५॥

आदित्यभयदाता च मृत्युरादित्यनन्दनः ।
शतभिरुक्षदयिता त्रयोदशीतिथिप्रियः ॥ १६॥

तिथ्यात्मा तिथिगणनो नक्षत्रगणनायकः ।orतिथ्यात्मकस्तिथिगणो
योगराशिर्मुहूर्तात्मा कर्ता दिनपतिः प्रभुः ॥ १७॥

शमीपुष्पप्रियः श्यामस्त्रैलोक्याभयदायकः ।
नीलवासाः क्रियासिन्धुर्नीलाञ्जनचयच्छविः ॥ १८॥

सर्वरोगहरो देवः सिद्धो देवगणस्तुतः ।
अष्टोत्तरशतं नाम्नां सौरेश्छायासुतस्य यः ॥ १९॥

पठेन्नित्यं तस्य पीडा समस्ता नश्यति ध्रुवम् ।
कृत्वा पूजां पठेन्मर्त्यो भक्तिमान्यः स्तवं सदा ॥ २०॥

विशेषतः शनिदिने पीडा तस्य विनश्यति ।
जन्मलग्ने स्थितिर्वापि गोचरे क्रूरराशिगे ॥ २१॥

दशासु च गते सौरौ तदा स्तवमिमं पठेत् ।
पूजयेद्यः शनिं भक्त्या शमीपुष्पाक्षताम्बरैः ॥ २२॥

विधाय लोहप्रतिमां नरो दुःखाद्विमुच्यते ।
बाधा याऽन्यग्रहाणां च यः पठेत्तस्य नश्यति ॥ २३॥

भीतो भयाद्विमुच्येत बद्धो मुच्येत बन्धनात् ।
रोगी रोगाद्विमुच्येत नरः स्तवमिमं पठेत् ॥ २४॥

पुत्रवान्धनवान् श्रीमान् जायते नात्र संशयः ॥ २५॥

नारद उवाच ॥

स्तवं निशम्य पार्थस्य प्रत्यक्षोऽभूत् शनैश्चरः ।
दत्त्वा राज्ञे वरः कामं शनिश्चान्तर्दधे तदा ॥ २६॥

॥ इति श्री भविष्यपुराणे शनैश्चरस्तवराजः सम्पूर्णः ॥